अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः ।

इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रय**म्** ।।

**Contd…..**

चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत् ।
आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा ।।

**Contd…..**

क्वचिन्निन्दा खलादीनां सतां च गुणकीर्तन**म्** ।

एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः ।।

**Contd…..**

ना**ति**स्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ।

नानावृत्तमयः कापि सर्गः कश्चन दृश्यते ।।

**Contd…..**

सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ।

**सन्**ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ॥

Contd…..

प्रातर्मध्या**ह्न**मृगयाशैलर्तुवनसागराः ।

**सम्भो**गविप्रलम्भौ च मुनिस्वर्गपु**रा**ध्वराः ।।

Contd…..

रणप्रयाणोपयममन्त्र**पु**त्रोदयादयः ।।

वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ।।

Contd…..

कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।

नामास्य सर्गोपादेयकथया सर्गनाम तु ।।

Contd…..

सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ।
सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः ।।

**Contd…..**

एकवंशभवा भूपाः कुलजा बहवोऽपि वा ।

शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते ।।

**Contd…..**

नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।
विलासर्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ।।

त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षो अनुरक्तलोकस्तेजो वैदग्ध्यशीलवान्नेता ।।

Contd…..

प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ।।

दुष्यन्तादिः, श्रीरामः, श्रीकृष्णादिवत् दिव्यः, युधिष्ठिरादिवत् दिव्यादिव्यो वा केषुचित् नायकः भवेत् ।

**Contd…..**

रूपकेषु नायकभेदः चतुर्धा अस्ति । तच्च -

**i.** धीरोदात्तः **ii.** धीरोद्धतः **iii.** धीरललितः **iv.** धीरप्रशान्तः चेति ।

**Contd…..**

## i. धीरोदात्तः

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ।।

यथा - रामयुधिष्ठिरादिः ।

Contd.....

## ii. धीरोद्धतः

मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः ।
आत्मश्लाघानिरतो धीरोद्धतः कथितः ।।

**यथा - भीमसेनादिः।**

Contd.....

# iii. धीरललितः

निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात् ।

यथा - रत्नावाल्यादौ वत्सराजादिः ।

**Contd…..**

## iv. धीरप्रशान्तः

सामान्यगुणैर्भूयान्द्विजादिको धीरप्रशान्तः स्यात् ।

यथा - मालतीमाधवादौ माधवादिः ।

नायिका पुनर्नायिकसामान्यगुणैः त्यागादिभिर्यथासम्भवैर्युक्ता भवति ।

सा च **(i)** स्वस्त्री **(ii)** अन्यस्त्री **(iii)** साधारणस्त्रीति त्रिविधा ।

**Contd.....**

## (i) स्वस्त्री

विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया ।

यथा - उत्तररामचरिते सीता ।

# (ii) अन्यस्त्री (परकीया)

परकीया द्विधा प्रोक्ता परोढा कन्यका तथा ।

यथा मालतीमाधवादौ मालत्यादिः ।

**Contd.....**

## (iii) साधारणस्त्री

**धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका ।।**
**निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि ।**

यथा मृच्छकटिकादौ वसन्तसेनादिः ।

